## अथ तर्पणविधि:

प्रात: सन्ध्यां कृत्वा गायत्र्या एकमेकमञ्जलिं दद्यात्। तत: सूर्याभिमुखमुतिष्ठन् वदेत्- ॐ असावादित्यो ब्रह्म:। ॐ उद्वयं तमसस्परि स्व: पश्यन्तऽउत्तरम्। देवं देवत्रा सूर्यमगन्म-ज्योतिरुत्तमम्। ॐ उदुत्यं जातवेदसं देवं वहन्तिं केतव:। दृषे विश्वाय सूर्यं।

ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्ने:। आप्राद्यावा पृथिवीऽअन्तरिक्षं गुं सूर्य्यऽआत्मा जगतस्तस्त्थुषश्च स्वाहा। तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्। पश्येम शरद: शतं जीवेम शरद: शतं गुं श्रुणुयाम शरद: शतं प्रब्रवाम शरद: शतमदीना: स्याम शरद: शतं-भूयश्च शरद: शतात्। इति प्रार्थयन् हस्ते ताम्रपात्रे जलं कुशत्रयं, यवान्नक्षतांश्च गृहीत्वा सङ्कल्पं कुर्यात् ।

**तत: संकल्प:-** ॐ विष्णुर्विष्णुर्विष्णु अद्येत्यादि......शुभपुण्यतिथौ श्रुति-स्मृति-पुराणोक्तफलप्राप्त्यर्थं परमेश्वरप्रीत्यर्थं देव-ऋषि-मनुष्य-पितृतर्पणमहं करिष्ये।

(तत: शिवसंकल्पसूक्तं पठेत्। ततो दक्षिणहस्त-अनामिकया यज्ञोपवीतं धृत्वा निम्नमन्त्रं पठेत्।

**ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्व: प्रसवऽउत्पुनाम्य छिद्रेण पवित्रेण सूर्यस्य रश्मिभि:। तस्य ते पवित्रपते पवित्रपुतस्य यत्काम: पुनेतच्छवेऽयम्।।**

तत आचम्य गायत्रीमन्त्रं त्रिवारं पठित्वा तज्जलमभिमन्त्र्य मुष्ठिनि:सृतजलेन कुशत्रयै: शिर: प्रभृति पादान्तं मार्जयेत्। शेषजलं भूमौ प्रक्षिपेत्। तत: सकृदाचम्य कुशत्रयं पूर्वाग्र-आवाहनपात्रे स्थापयित्वा दक्षकरेण सम्पुटीकृत्य निम्नलिखितं मन्त्रं पठेत्।

**आगच्छन्तु महाभागा विश्वेदेवा महाबला:। ये तर्पणेऽत्र विहिता: सावधाना भवन्तु ते।।**

ॐ विश्वेदेवा: शृणुतेम गुं हवं मे ये अन्तरीक्षे य उपद्यविष्ठ।

ये अग्निर्जिह्वा उत वा यजत्रा आसद्यास्मिन् वर्हिषि मादयध्वम्।।(यजु. ३ ३-५ ३)

**१. देवतर्पणम्-** (पूर्वाभिमुख बैठें, यज्ञोपवीत सव्य हो, दाहिना घुटना जमीन पर हो, अर्घपात्र में चावल रखें, त्रिकुशा का अग्रभाग पूर्वाभिमुख हो, देवतीर्थ (अङ्गुली के अग्रभाग) से १-१ जलाञ्जलि निम्नलिखित मन्त्र को पढ़ते हुए तर्पण करे)

ॐ ब्रह्मा तृप्यताम्, ॐ विष्णुस्तृप्यताम्। ॐ रुद्रस्तृप्यताम्। ॐ प्रजापतिस्तृप्यताम् । ॐ देवास्तृप्यन्ताम्। ॐ छन्दांसि तृप्यन्ताम्। ॐ वेदास्तृप्यन्ताम्। ॐ ऋषयस्तृप्यन्ताम्। ॐ पुराणाचार्यास्तृप्यन्ताम्। ॐ गन्धर्वाचार्यास्तृप्यन्ताम्। ॐ इतराचार्यास्तृप्यन्ताम्। ॐ सम्वत्सर: सावयवस्तृप्यताम्। ॐ देव्यस्तृप्यन्ताम्। ॐ अप्सरसस्तृप्यन्ताम्। ॐ देवानुगास्तृप्यन्ताम्। ॐ नागास्तृप्यन्ताम्। ॐ सागरास्तृप्यन्ताम्। ॐ पर्वतास्तृप्यन्ताम्। ॐ सरितस्तृप्यन्ताम्। ॐ मनुष्यास्तृप्यन्ताम्। ॐ यक्षास्तृप्यन्ताम्। ॐ रक्षांसि तृप्यन्ताम्। ॐ पिशाचास्तृप्यन्ताम्। ॐ सुपर्णास्तृप्यन्ताम्। ॐ भूतानि तृप्यन्ताम्। ॐ पशवस्तृप्यन्ताम्।

ॐ वनस्पतयस्तृप्यन्ताम्। ॐ ओषधयस्तृप्यन्ताम्। ॐ भूतग्रामचतुर्विधस्तृप्यन्ताम्।

**२. ऋषितर्पणम्-** (पूर्व विधि से)

ॐ मरीचिस्तृप्यताम्। ॐ अत्रिस्तृप्यताम्। ॐ अङ्गिरास्तृप्यताम्। ॐ पुलस्त्यस्तृप्यताम्। ॐ पुलहस्तृप्यताम्। ॐ क्रतुस्तृप्यताम्। ॐ वशिष्ठस्तृप्यताम्। ॐ प्रचेतास्तृप्यताम्। ॐ भृगुस्तृप्यताम्। ॐ नारदस्तृप्यताम्।

**३. दिव्यमनुष्यतर्पणम्-** (उत्तराभिमुख होकर यज्ञोपवीत कण्ठ मे धारण करे, गमछा भी कण्ठी की तरह हो, घुटना जमीन पर न होवे, यव मिश्रित जल से त्रिकुशा को उत्तराग्र करके प्रजापति तीर्थ अर्थात् दाहिने हाथ की कनिष्ठा के मूल से, २-२ अञ्जलि जल देवें ) ।

ततो निवीति (उपवीतं माला-इव कण्ठे धारणीयम्) उत्तराभिमुखावाहनकुशानुत्तराग्रान् कृत्वा पुष्पाक्षतैरावाहयेत्। ॐ सनकाद्या सप्तदिव्यमनुष्याऽत्रगच्छत।

तत: भूमौ यवान् विकीर्य प्रजापतितीर्थेन (कनिष्ठाङ्गुलिमूलेन) निम्नलिखितान् दिव्यमनुष्यान् प्रत्येकं द्विवारं तर्पयेत्।

ॐ सनकस्तृप्यताम्। (२) ॐ सनन्दनस्तृप्यताम्। (२) ॐ सनातनस्तृप्यताम्। (२) ॐकपिलस्तृप्यताम्। (२) ॐ आसुरिस्तृप्यताम्। (२) ॐ वोदुस्तृप्यताम्। (२) ॐ पञ्चशिखस्तृप्यताम्।(२)

**४. दिव्यपितृतर्पणम्-** (दक्षिणाभिमुख हो यज्ञोपवीत और गमछा दाहिने कन्धे पर धारण करे, बायाँ घुटना जमीन पर हो, तिलाञ्जलि से त्रिकुशा को बीच से मोड़कर जड़ तथा अग्रभाग को तर्जनी और अँगुठे मूल में रखकर पितृतीर्थ अर्थात् दाहिने हाथ की तर्जनी और अँगुष्ठ मूल से, ३-३ अञ्जलि जल देवें )।

ततो द्विगुणीकृत्य कुशत्रयमूलाग्रेन अञ्जलिना (ताम्रपात्रेण वा) पितृतीर्थेन तर्पयेत्।

ॐ कव्यवाडनलस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नम:।। ३

ॐ सोमस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नम:।। ३

ॐ यमस्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नम:।। ३

ॐ अर्यमास्तृप्यताम्। इदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नम:।। ३

ॐ अग्निष्वत्ता: पितरस्तृप्यन्ताम्। इदं सतिलं जलं (गङ्गाजलं वा) तेभ्य: स्वधा नम:।। ३

ॐ सोमपा: पितरस्तृप्यन्ताम्। इदं सतिलं जलं (गङ्गाजलं वा) तेभ्य: स्वधा नम:।। ३

ॐ बर्हिषद: पितरस्तृप्यन्ताम्। इदं सतिलं जलं (गङ्गाजलं वा) तेभ्य: स्वधा नम:।। ३

(इति प्रत्येकं त्रिवारमञ्जलिदानम्)

५. यमतर्पणम्- (विधि पूर्वोक्त दिव्यपितृतर्पणवत्)
**ॐ यमाय नमः (३)। ॐ धर्मराजाय नमः(३)। ॐ मृत्यवे नमः (३)। ॐ अन्तकाय नमः (३)। ॐ वैवस्वताय नमः (३)। ॐ कालाय नमः (३)। ॐ सर्वभूतक्षयाय नमः (३)। ॐ औदुम्बराय नमः (३)। ॐ दध्नाय नमः(३)। ॐ नीलाय नमः(३)। ॐ परमेष्ठिने नमः(३)। ॐ वृकोदराय नमः(३)। ॐ चित्राय नमः(३)। ॐ चित्रगुप्ताय नमः (३)।**

६. मनुष्यपितृतर्पणम् (पूर्वोक्त विधि से पितरों का आवाहन करें)।

ततोऽपसव्यः दक्षिणमुखः त्रिकुशान् दक्षिणाग्रं कृत्वा वामजानुं भूमौ निधाय तिल-तुलसी-पुष्पैः कव्यवाडनलादयो दिव्यपितृन्नावाहयेत्।

ॐ कव्यवाडनलादयो दिव्यपितरोऽत्रागच्छत। ॐ वसवो रुद्रादित्याचार्या अत्रागच्छत।
**ॐ उशन्तस्त्वा नि धीमह्युशन्तः समिधीमहि। उषन्नुशत आ वह पितृन् हविषे अत्तवे।।**
पितृनावाहयिष्ये, आवाह्य। **ॐ आयन्तुनः पितरः सोम्यासोऽग्निष्वात्ताःपथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।।** (यजु.-१९-५८)

उपर्युक्तेन मन्त्रेण पितृन् नमस्कृत्य कुशाग्रान् उत्तराभिमुखं कृत्वा ताम्रपात्रे तिलान् संस्थाप्य पितृतीर्थेन प्रत्येकं वारत्रयं तर्पयेत्।

अमुक गोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यताम्। इदं सतिलं जलं तस्मै स्वधा नमः।।३
अमुकगोत्रोऽस्मत्पितामह अमुकशर्मा रुद्ररूपस्तृप्यताम्। इदं सतिलं जलं तस्मै स्वधा नमः।।
अमुकगोत्रोऽस्मत् प्रपितामह अमुकशर्मा वसुरूपस्तृप्यताम्। इदं सतिलं जलं तस्मै स्वधा नमः।।३
अमुकगोत्रा अस्मत्माता अमुकी देवी वसुरूपा तृप्यताम्। इदं सतिलं जलं तस्यै स्वधा नमः।।३
अमुकगोत्रा अस्मत्पितामही अमुकी देवी रुद्ररूपा तृप्यताम्। इदं सतिलं जलं तस्यै स्वधा नमः।।३
अमुकगोत्रा अस्मत् प्रपितामही अमुकी देवी आदित्यरूपा तृप्यताम्। इदं सतिलं जलं तस्यै स्वधा नमः।।३

**द्वितीयगोत्रतर्पणम्-**

अमुकगोत्रोऽस्मन्मातामह अमुकशर्मा अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।
अमुकगोत्रोऽस्मत् प्रमातामह अमुकशर्मा अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।
अमुकगोत्रोऽस्मत् वृद्धप्रतामह अमुकशर्मा अत्रागच्छत। इदं सतिलं जलं तस्मै स्वधा नमः।।
**मन्त्रः- आयन्तु नः पितरः सोम्यसोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।।** (यजु.-१९-५८)
इति मन्त्रं कृताञ्जलिः पठेत्।



**मन्त्रः- ॐ उदीरतामवर उत्पराश उन्मध्यमाः पितरः सोम्यासः। असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु।।** (यजु.-१९-४९)
ततः परं निम्नलिखितैः नवभिर्मन्त्रैः पितृतीर्थेन तिलाञ्जलिना तर्पयेत्।
अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।
**मन्त्रः- ॐ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः। तेषां वयं गुँ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम।।** (यजु.-१९-५०)
अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।
**मन्त्रः- ॐ आयन्तु नः पितरः सोम्यसोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधि ब्रुवन्तु तेऽवन्त्वस्मान्।।** (यजु.-१९-५८)
अमुकगोत्रोऽस्मत्पिता अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।
**मन्त्रः- ॐ ऊर्जं वहन्तीरमृतं घृतं पयः किलालं परिस्रुतं। स्वधा स्थः तर्पयत मे पितृन्।।** (यजु.-२-३४)
अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं (गङ्गाजलं वा)तस्मै स्वधा नमः।
**मन्त्रः- ॐ अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्।।**
अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं (गङ्गाजलं वा) तस्मै स्वधा नमः।
**मन्त्रः-ये चेह पितरो ये च नेह यांश्च विद्म याँ उ च न प्रविद्म। त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञ गुं सुकृतं जुषस्व।।** (यजु.-१९-६७)
अमुकगोत्रोऽस्मत्पितामहोऽमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं(गङ्गाजलं वा) तस्मै स्वधा नमः।
**मन्त्रः- ॐ मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः। माध्वीर्नः सन्त्वोषधीः।।** (यजु.-१३-२७)
अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।
**ॐ मधुनक्तमुतोषसो मधुमत्पार्थिव गुं रजःमधुद्यौरस्तुनः पिता।।** (यजु.-१३-२८)
अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।
**मन्त्रः-ॐ मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः। माध्वीर्गावो भवन्तु नः।।** ( यजु.- १३-२९)
अमुकगोत्रोऽस्मत् प्रपितामहोऽमुकशर्मा आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नमः।
**मन्त्रः- ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः। पितामहेभ्यः स्वधायिभ्यः स्वधा नमः। प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्तपितरः पितरः शुन्धध्वम्।।** (यजु.-१९-३६)
अमुकगोत्रोऽस्मत्पितृ-पितामह-प्रपितामहाः अमुकामुकशर्माणः तृप्यन्तामिदं जलं यथाविभागं युष्मभ्यं स्वधा नमः। (एवं सर्वत्र त्रिवारं जलाञ्जलिदानं कर्तव्यम्।)

पितृनमस्कार:-

**ॐ नमो व: पितरो रसाय, नमो व: पितरो शोषाय, नमो व: पितरो जीवाय, नमो व: पितर: स्वधायै, नमो व: पितरो घोराय, नमो व: पितरो मन्यवे, नमो व: पितर: पितरो नमो वो गृहान्न: पितरो दत्त सतो व: पितरो देष्मैत द्व पितरो वास आधत्त।।** ( यजु.- २-३२)

**मातृतर्पणम्-**

अमुकगोत्राऽस्मान्माता अमुकादेवी वसुरूपा तृप्यतामिदं जलं तस्यै स्वधा नम:।। ३।।

अमुकगोत्राऽस्मत्पितामही अमुकादेवी रुद्ररूपा तृप्यतामिदं जलं तस्यै स्वधा नम:।। ३।।

अमुकगोत्राऽस्मत्प्रपितामही अमुकादेवी आदित्यरूपा तृप्यतामिदं जलं तस्यै स्वधा नम:।। ३।।

(तत: समूहरूपेण मातृ-पितामही-प्रपितामहीभ्य त्रिजलाञ्जलिं दद्यात्।)

**मातामहादितर्पणम्-**

अमुकगोत्रोऽस्मन्मातामह अमुकशर्मा वसुरूपस्तृप्यतामिदं जलं तस्मै स्वधा नम:।। ३।।

अमुकगोत्रोऽस्मत् प्रमातामह अमुकशर्मा रुद्ररूपस्तृप्यतामिदं जलं तस्मै स्वधा नम:।। ३।।

अमुकगोत्रोऽस्मद् वृद्धप्रमातामह अमुकशर्मणे आदित्यरूपस्तृप्यतामिदं जलं तस्मै स्वधा नम:।। ३।।

(अत्रैव मन्त्रगुरु-श्वशुर-मातुल-ज्येष्ठकनिष्ठभ्राता-पितृव्यादीनां च स्व स्व गोत्रनामोच्चारणपूर्वकं प्रत्येकमेकैकमञ्जलिना तर्पयेत्।)

**७. देवासुरयक्षनागादीनां तर्पणम्-** (सव्य विधि द्वारा तर्पण करे)

ततोपनिवीति (सव्य:) पूर्वाभिमुख:, पार्श्वेस्थितकुशाग्रान् पूर्वाभिमुखं कृत्वा देवतीर्थेन एकैकमञ्जलिं जलं तर्पयेत्। अथ मन्त्र:-

**देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसा:। पिशाचा गुह्यका: सिद्धा:कुष्माण्डास्तरव: खगा:।।**
**जलेचरा भूनिलया वाय्वधाराश्च जन्तव:। तृप्तिमेते प्रयन्त्याशु मद्दत्तेनाम्बुनाखिला:।।**

**८. नरकस्थितजीवतर्पणम्-** (अपसव्य विधि से)

ततोऽपसव्य: दक्षिणाभिमुख: कुशमूलाग्रान् एकीकृत्य पितृतीर्थेन निम्नमन्त्रं पठित्वा एकाञ्जलिं सतिलं जलं दद्यात्।

**नरकेषु समस्तेषु यातनासु च ये स्थिता:। तेषामाप्यायनायै तद् दीयते सलिलं मया।।**
**येऽबान्धवा बान्धवाश्च येऽन्यजन्मनि बान्धवा:। ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति।।**
**ये मे कुले लुप्तपिण्डा: पुत्रदारविवर्जिता:। तेषां हि दत्तमक्षय्यमिदमस्तु तिलोदकम्।।**
**आब्रह्मस्तम्बपर्यन्तं देवर्षिपितृमानवा:। तृप्यन्तु पितर: सर्वे मातृमातामहादय:।।**
**अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्।।**

**वस्त्रनिष्पीडनम्-** (गमछा को चार तह करके तिल जल रखकर निम्नलिखित मन्त्र पढ़कर वायें तरफ निचोड़ें ) आवाहनकुशत्रयमञ्जलिकुशत्रयं च द्विगुणितं कृत्वा पात्रे क्षिपेत्। मन्त्र:-

**ये के चास्मत् कुले याता अपुत्रा: गोत्रिणो मृता:। ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडितोदकम्।।**

**भीष्मतर्पणम्-** (भीष्मपितामह हेतु कुशोदक द्वारा पितृतीर्थ से तर्पण करें )

भीष्मपितामहस्य कृते पितृतीर्थेन कुशोदकेन तर्पयेत्।

**व्याघ्रपादसगोत्राय सकृतिप्रवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे।।**
**भीष्मशान्तनवो वीर: सत्यवादी जितेन्द्रिय:। आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्।।**

ततोपवीति (सव्य: पूर्वाभिमुख:)आचम्य गायत्र्या ऋष्यादिकं विन्यस्य यथाशक्ति गायत्रीजपं कुर्यात्।

**९.सूर्यार्घ्यदानम्-** (अर्घ्यपात्र को स्वच्छ कर पूर्वाभिमुख सव्य ह्वे निम्नलिखित मन्त्रद्वारा सूर्यार्घ्य देवें)

**नमो विवस्वते ब्रह्मन् ! भास्वते विष्णुतेजसे! । जगत्सवित्रे शुचये सवित्रे कर्मदायिने।।**

तत्पश्चात् परिक्रमा करते हुए दिशाओं एवं उनके अधिष्ठित देवों को नमन करें।

ॐ प्राच्यै नम:, ॐ इन्द्राय नम: । ॐ आग्नेय्यै नम:, ॐ अग्नये नम: । ॐ दक्षिणायै नम:, ॐ यमाय नम: । ॐ नैर्ऋतये नम:, ॐ निर्ऋतये नम: । ॐ प्रतीच्यै नम:, ॐ वरुणाय नम: । ॐ वायव्यै नम:, ॐ वायवे नम: । ॐ उदीच्यै नम:, ॐ कुवेराय नम: । ॐ ऐशान्यै नम:, ॐ ईशानाय नम: । ॐ ऊर्ध्वायै नम:, ॐ ब्रह्मणे नम: । ॐ अधरायै नम:, ॐ अननताय नम: । (इस प्रकार परिक्रमा के अनन्तर निम्नलिखित मन्त्र से १-१ अञ्जलि देवें ।)

ॐ ब्रह्मणे नम: । ॐ अग्नये नम: । ॐ पृथिव्यै नम: । ॐ ओषधिभ्यो नम: । ॐ वाचे नम: । ॐ वाचस्पतये नम: । ॐ महद्भ्यो नम: । ॐ विष्णवे नम: । ॐ अद्भ्यो नम: । ॐ अपाम्पतये नम: । ॐ वरुणाय नम: ।

**समर्पणम्-** ॐ अनेन यथाशक्तिकृतेन देवर्षिमनुष्यपितृतर्पणाख्येन कर्मणा भगवान् पितृस्वरूपी-जनार्दनवासुदेव: प्रीयतां न मम ।

**तत: प्रर्थनामन्त्रा:-**

ॐ नमस्ते विष्णुरूपाय नमस्ते ब्रह्मरूपिणे। सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे।।
नमस्ते रुद्रवपुषे नमस्ते भक्तवत्सले। जगत्स्वामिन्नमस्तेऽस्तु दिव्यचन्दनरूपधृक्।।
पद्मनाभ! नमस्तेऽस्तु कुण्डलाङ्गदभूषित!। नमस्ते सर्वलोकेश! सुप्तानां सम्प्रबोधक!।।
सत्यदेव! नमस्तेऽस्तु प्रसीद मम भास्कर!। दिवाकर! नमस्तेऽस्तु प्रभाकर! नमोऽस्तुते।।
ॐ हिरण्यगर्भ: समवर्तताग्रे भूतस्यजात: पतिरेक आसीत्।
सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम।।

।। हरि: ॐ तत्सत्।।

# ❋ अथ मुहूर्त-विचार: ❋

| | अथविवाहमुहूर्तविचार:- | अथगृहारम्भमुहूर्तविचार:- | अथद्विरागमनमुहूर्तविचार:- | |
|---|---|---|---|---|
| मासा: | तुलायां- कार्त्तिके देवोत्थानात्परं, वृश्चिके- मार्ग, मकरे- पौष-माघयो:, कुम्भे- फा., मेषे- चैत्र-वैशाखयो:, वृषे-ज्ये., मिथुने- आषाढस्य हरिशयनात्प्राक् मासेषु सौरक्रमेण। यत: **विवाहादौ स्मृत: सौर:** यज्ञादौ सावन: स्मृत: इति वचनात्। | बृद्धत्वास्तशिशुत्वइज्यसितयो: कालं विना, मेषे- चैत्र:, वृषे- ज्ये., कर्के- आषाढ़:, सिंहे- भाद्रपद:, तुलायाम्- आश्विन:, वृश्चिके- कार्त्तिक:, मकरे- पौष:, कुम्भे- माघ: शुभ:। वैशाख-आषाढ़ (पशुगृहं विना) श्रावण-कार्त्तिक-मार्गशीर्ष-माघ-फाल्गुनमासेषु प्रवेश: शुभ:। | विषमवर्षे, मार्गशीर्ष-फाल्गुन-वैशाखमासेषु (सौरक्रमेण), वरस्य रवीज्यशुद्धियोगे, सम्मुख-दक्षिणशुक्रं विना द्विरागमनं शुभाय भवति। यत: विवाहे गुरुशुद्धि: स्यात् शुक्रशुद्धि: द्विरागमे। त्रिगमे राहुशुद्धिश्च चन्द्रशुद्धिश्चतुर्गमे॥ | मासा: |
| तिथय: | १-२-३-५-६-७-८-१०-११-१२-१३-१५ | शुक्लपक्षे-२-३-५-६-७-१०-११-१२-१३-१५ तिथिषु, कृष्णपक्षे दशमीं यावत्। | १-२-३-५-६-७-८-१०-११-१२-१३-१५ | तिथय: |
| दिवसा: | सू.चं.बु.बृ.शु.वारेषु, | चं.बु.बृ.शु.श.वारेषु, | सू.चं.बु.बृ.शु.वारेषु, | दिवसा: |
| नक्षत्राणि | अश्वि.रो.मृ.म.उतरा-३,ह.चि.स्वा.अनु.मू.श्र.ध.रे.नक्षत्रेषु,मृत्युबाण-पञ्चशलाका वेधरहितेषु, | अश्वि.रो.मृ.पुन.पु.उत्तरा-३,ह.चि.स्वा.अनु.मू.श्र.ध.शत.रे.नक्षत्रेषु, वृषचक्रशुद्धे नक्षत्रे, पृथ्वीशयनरहितेषु। | लघु-ध्रुव-चर-मृदुस्तथामूलनक्षत्रेषु। यथा- अश्वि.रो.मृ.पुन.पु.उतरा-३,ह.चि.स्वा.अनु.मू.श्र.ध.नक्षत्रेषु, | नक्षत्राणि |
| लग्नानि | **वृष-मिथुन-कन्या-तुला-धनु-मीन-लग्नेषु,** | २, ३, ५, ६, ८, ९, ११, १२, स्वामिशुभदृष्टे, लग्नात् केन्द्रे त्रिकोणे च शुभा:, त्रिषडाये पापा:, ८, १२ शुभ-पापरहिते। | वृष-मिथुन-कन्या-तुला-मीन-लग्नेषु, | लग्नानि |

| | अथोपनयनमुहूर्तविचार:- | अथगृहप्रवेशमुहूर्तविचार:- | अथवधूप्रवेशमुहूर्तविचार:- | |
|---|---|---|---|---|
| मासा: | उत्तरायणे, बृद्धत्वास्तशिशुत्वइज्यसितयो: कालं विना, माघादिषण्मासेषु यथा-माघ-फाल्गुन-वैशाख-ज्येष्ठ-आषाढस्य हरिशयनात्प्राक् मासेषु तथा चैत्रे मीने ब्राह्मणवटूनामुपनयनमुक्तम्। | बृद्धत्वास्तशिशुत्वइज्यसितयो: कालं विना, उत्तरायणे, वैशाख-ज्येष्ठ-माघ-फाल्गुनमासेषु, श्रावण-मार्ग-कार्त्तिकमासेषु प्रवेश: शस्त:। अत्र **गृहारम्भोदितै र्मासैर्धिष्ण्ये वारे विशेद् गृहमिति** ज्योति:प्रकाशवचनमपि ग्राह्यम्। | विवाहदिवसात्षोडशदिनमध्ये समदिने तथा पञ्चम-सप्तम-नवमदिनेऽपि ततो मासमध्ये विषमदिने, ततो वर्षाभ्यन्तरे विषममासे,चैत्र-पौष-भाद्र-मलमासभिन्नसमये वधूप्रवेश: प्रशस्त:। नात्र कालशुक्रयोर्विचार:। | मासा: |
| तिथय: | शुक्ले-२-३-५-१०-११-१२ तथा कृष्णे- २-३-५ तिथिषु। रुग्बाणादिदोषरहिते काले। | १-२-३-५-६-७-८-१०-११-१२-१३-१५ तिथिषु, कृष्णपक्षे दशमीं यावत्। | १-२-३-५-६-७-८-१०-११-१२-१३ | तिथय: |
| दिवसा: | सू.चं.बु.बृ.शु.वारेषु, पूर्वाह्णे। | चं.बु.बृ.शु.श.वारेषु, | चं.बृ.शु.श.वारेषु मतान्तरेण बुधेऽप्यावश्यके | दिवसा: |
| नक्षत्राणि | अश्वि.रो.मृ.आ.पुन.पु.आश्ले. पूर्वा-३,उतरा-३,ह.चि.स्वा.अनु.मू.श्र.ध.शत.रे.नक्षत्रेषु, ब्राह्मणानां पुनर्वसु नक्षत्रे उपनयनं निषिद्धम्। | अश्वि.रो.मृ.पु.उतरा-३,ह.चि.स्वा.अनु.मू.श्र.ध.श.रे नक्षत्रेषु, कुम्भचक्रशुद्धौ यथा- सूर्यनक्षत्रात् ५ अशुभ:, ततो ८ शुभ:, ततो ८ अशुभ:, ततो ६ शुभ:। | अश्वि.रो.मृ.पुष्य.उतरा-३,ह.चि.स्वा.मृ.श्र.ध.रे.अनु.नक्षत्रेषु, | नक्षत्राणि |
| लग्नानि | **वृष-कर्क-तुला-धनु-मीन-लग्नेषु,** | २,३,५,६,८,९,११,१२ लग्नेषु | २-३-५-६-७-८-९-११-१२ लग्नेषु। शुभै: १-२-५-७-१०-११ स्थितैश्चतुर्थाष्टम-शुद्धे शुभप्रद:। | लग्नानि |
| विशेषश्च | जन्मकालात् ब्राह्मणानां ५ त: १६ वर्षपर्यन्तं, क्षत्रियाणां ६ त: २२ वर्षपर्यन्तं, वैश्यानां ८ त: २४ वर्षपर्यन्तमुपनयनकाल:। | | | |

## अथ मुहूर्त-विचार:

**नववध्वा:पाकारम्भमुहूर्त:**-शुक्लपक्षे-शभतिथिषु कृष्णे५तिथिं यावत्,बु.बृ.श. वारेषु.रो.मृ.उ.-३,पुष्य.कृ. रो.वि.ज्ये.श्र.ध.श.रे.नक्षत्रेषु, स्थिरलग्नेषु च पाकारम्भ: शुभ:।

### नामकरणमुहूर्त:-

विप्राणां ११,क्षत्रियाणां १३; वैश्यानां १६,शूद्राणां ३१,तमे दिवसे, चं.बु.बृ. शु.दिनेषु, पूर्वाह्ने, १-२-३-५-७-१०-११-१२-१३ तिथिषु, स्वा.पुन.श्र.ध.ह. अश्वि.पुष्य.अभि उत्तरा-३,रो.मृ.रे.चि.अनु.नक्षत्रेषु नामकरणं शुभम्।

### अन्नप्राशनमुहूर्त:-

बालकानां षष्ठात्सप्तममासेषु, कन्याकानां पञ्चममासतो विषममासेषु,शुक्लपक्षे पूर्वाह्णे२-३-५-७-१०-१३-१५-तिथिषु,रो.उत्तरा-३,मृ.रे.चि.अनु.स्वा.पुन.श्र.ध.श.ह. अश्वि.पुष्य.अभि.नक्षत्रेषु,चं.बु.बृ.शु.दिनेषु, २-३-४-५-६-७-९-१०-११, लग्नेषु शुभदृग्युतलग्ने अन्नप्राशनं शुभम्।

### अक्षरारम्भमुहूर्त:-

उत्तरायणे पञ्चमवर्षे (बालो यदि क्षमस्तदा तत्पूर्वमपि) गणेशविष्णुसरस्वती लक्ष्मीकुलदेव ग्रामदेवान् विधिवत्सम्पूज्य प्रथमाक्षरारम्भ: कार्य: । शुभसमये शुक्लपक्षे २-३-५-६-१०-११-१२ तिथिषु (कृष्णे ५ तिथिं यावत्) अश्वि.आर्द्रा.पुन.पुष्य.ह.चि. स्वा.अनु. अभि.श्र.रे.नक्षत्रेषु चं.बु.बृ.शु.दिनेषु,२-३-६-९-१२ लग्नेषु, अक्षरारम्भ: शुभप्रदो भवति। **विद्यारम्भे उपर्युक्तेषु-** रविवासर: ग्राह्य: सोमवासर: अग्राह्य: एवञ्च पञ्च नक्षत्राणि भ.कृ.म.विशा.ज्ये. अग्राह्यानि सन्ति ।

### कोषागारादौ द्रव्यप्रयोगमुहूर्त:-

अश्वि.मृग.पुन.पुष्य.ह.चि.स्वा.अनु.श्र.ध.श.रे.नक्षत्रेषु सू.मं.बु.बृ.शु.वारेषु शुद्धसमये,३-५-८-१०-१३-१५ तिथिषु, शुभग्रहयुक्तलग्नेषु, कोषागारादौ द्रव्यस्थापन-मेवञ्च स्वा.पुन.मृ.रे.चि. अनु.वि.पुष्य.श्र.ध.श.नक्षत्रेषु,शुभतिथिषु, १-४-७-१० लग्नेषु, चं.बृ.शु.श. वारेषु ऋणप्रदानं शुभप्रदं भवति । **ऋणप्रदाने निषिद्धकाल:-** बुधवासर:,भ.कृ.आ.आश्ले.म.पू.-३, विशा.ज्ये.नक्षत्राणि, भद्रा च ।

**व्यवसायमुहूर्त:-** अश्वि.रो.पु.ह.उ.-३,अनु.अभि.१,२,३,५,६,७,१०,११,१२, १३,१५, तिथिषु, सू.चं. बु.बृ.शु.श.वारेषु, शुक्लपक्षे, कृष्णे १० तिथिं यावत्, कुम्भलग्नं विहाय अन्ये लग्ने, पापदृग्युतरहिते८-१२ भावे,शुभदृग्युते २,१०,११, भावे व्यवसायारम्भ: शुभप्रद: ।

### पशुक्रयविक्रयमुहूर्त:-

क्षिप्रान्त्यवह्नीन्दुभादित्येन्द्राम्बुपवासवेषु हि गवां शस्त: क्रयो विक्रय इति रामाचार्यवचनाद् अश्विनी-पुन.-पुष्य-हस्त-विशाखा-ज्येष्ठा-धनिष्ठा-शतभिषा-रेवती-नक्षत्रेषु, २-३-५-६-७-८-१०-११-१२-१३-१५-तिथिषु, रवि-चन्द्र-बुध-गुरु-शनिवारेषु गवां क्रयो विक्रयश्च शुभो भवति ।

### अथ सूतिकास्नानविचार:-

रे. उत्तरा-३ रो. मृ. ह. स्वा. अश्वि. अनु. एषु नक्षत्रेषु, १-२-३-५-६-१०-११-१३-१५ एतासु तिथिषु, रवि. मं. बृ. वासरेसु सूतिकास्नानं प्रशस्तम् । आ. पुन. पु. श्र. म. भ. वि. कृ. मू. चि. एषु नक्षत्रेषु, ४-६-८-९-१२-१४ एतासु तिथिषु; बुध-शनि वासरयो: अशुभम् । अन्यतिथि-वार-नक्षत्रेषु मध्यमं ज्ञातव्यम् ।

### अथ जलाशयारामसुरप्रतिष्ठामुहूर्तविचार:-

उत्तरायणे सौम्यदेवानां, याम्यायने उग्रदेवानां, रिक्तातिथिं विहाय, कुजदिनं विना, मृदु-चर-ध्रुव-क्षिप्रसंज्ञकनक्षत्रेषु अर्थात् अश्विनी-रोहिणि-मृग-पुनर्वसु-पुष्य-उत्तरा-३-हस्त-चित्रा-स्वाती-अनुराधा-अभिजित्-श्रवण-धनिष्ठा-शतभिषा-रेवती-नक्षत्रेषु, त्रिषडाये शशाङ्के पापे देवादिप्रतिष्ठा शुभाय भवति ।

### यात्रामुहूर्तविचार:-

**यात्रायां प्रशस्तनक्षत्राणि-** हयादित्यमित्रेन्दुजीवान्त्यहस्तश्रवोवासवैरेव यात्रा प्रशस्ता: इति रामाचार्यवचनानुसारेण आश्विनी-मृगशिरा-पुनर्वसु-पुष्य-हस्त-अनुराधा-श्रवणा-धनिष्ठा-रेवतीनक्षत्रेषु यात्रा शुभदायिनी भवति । एवमेव रोहिणी, उत्तरा-३, पूर्वा-३ नक्षत्राणि मध्यमफलदायिनी, भरणी, कृतिका, आर्द्रा, आश्लेषा, मघा, चित्रा, स्वाती, विशाखा, ज्येष्ठार्क्षाणि अधमफलदायिनी भवन्ति । एवमेव यात्रायां दिग्द्वारलग्नस्य महत्त्वमपि भवति । प्रसङ्गादत्र दिग्द्वारलग्नानां स्वरूपञ्चोपस्थाप्यते । **तद्यथा दिग्द्वारलग्नानि दिशानुरोधेन तत्फलञ्च**

| पूर्व | दक्षिण | पश्चिम | उत्तर | दिशा तत्फलञ्च |
|---|---|---|---|---|
| १/५/९ | २/६/१० | ३/७/११ | ४/८/१२ | शुभम् |
| २/६/१० | ३/७/११ | ४/८/१२ | १/५/९ | मध्यम् |
| ४/८/१२ | १/५/९ | २/६/१० | ३/७/११ | भयम् |
| ३/७/११ | ४/८/१२ | १/५/९ | २/६/१० | महद्भयम् |

अत्र प्रसङ्गात् सर्वदिगमननक्षत्राणि लिख्यन्ते- **सर्वदिगमने हस्त: पुष्याश्वौ श्रवणो मृग: । सर्वसिद्धिकर: पुष्य: विद्यायाञ्च यथा गुरु: ।।** परं यात्रायां न केवलं चन्द्रविचार: अपितु दिक्शूलविचारोऽपि कर्त्तव्य: ।

## अथ दिक्शूलविचार:

| दिशा | पूर्व | आग्नेय | दक्षिण | नैर्ऋत्य | पश्चिम | वायव्य | उत्तर | ईशान |
|---|---|---|---|---|---|---|---|---|
| वार: | चं.श. | शु. | बृ. | बु | सू.शु. | शु. | बु.मं. | बु.श. |

### अथावश्यके दिक्शूलपरिहार:-

न वारदोषा: प्रभवन्ति रात्रौ देवेज्यदैत्येज्यदिवाकराणाम् ।
दिवाशशाङ्कार्कजभूसुतानां सर्वत्र निन्द्यो बुधवार दोष: ।।
सूर्यवारे घृतं भुक्त्वा चन्द्रवारे पयस्तथा ।
गुडं मङ्गलवारे तु बुधवारे तिलानपि ।।
गुरुवारे दधि प्राश्यं शुक्रवारे यवान्नपि ।
माषान् भुक्त्वा शनिवारे शूलदोषोपशान्तये ।।

### उत्सवाद्यसमाप्तौ यात्रा न कार्या-

प्रतिष्ठोद्वाहमुत्साहं व्रतं चौलञ्च सूतकम् ।
असमाप्य न गन्तव्यमार्त्तवं योषितामपि ।।

### शकुनादीनां प्राशस्त्यम्-

यात्रायां शकुनं जीव ऊषो गर्ग: प्रशंसति ।
अङ्गिरामनोत्साहं विष्णुर्वाचं द्विजन्मनाम् ।।

### यात्रायां शुभशकुनानि-

विप्राश्वेभफलान्नदुग्धदधिगोसिद्धार्थपद्माम्बरं
वेश्यावाद्यमयूरचाषनकुला बद्धैकपश्वामिषम् ।
सद्वाक्यं कुसुमेक्षुपूर्णकलशच्छत्राणिमृतकन्यका
रत्नोष्णीषसितोक्षमद्यससुतस्त्रीदीप्तवैश्वानरा: ।।
आदर्शाञ्जनधौतवस्त्ररजका मीनाज्यसिंहासनं
शावं रोदनवर्जितं ध्वजमधुच्छागाद्यगोरोचनम् ।
भारद्वाजनृयानवेदनिनदा माङ्गल्यगीताङ्कुशा
दृष्टा: सत्फलदा: प्रयाणसमये रिक्तो घट: स्वानुग: ।।
मुहूर्तचिन्तामणि: यात्राप्रक. ११/१००,१०१

### यात्रायां विजयादशमीसंज्ञकस्य मुहूर्तस्य प्राशस्त्यम्-



इषमासि सिता दशमी विजया शुभकर्मसु सिद्धिकरी कथिता ।
श्रवणर्क्षयुता सुतरां शुभदा नृपतेस्तुगमे जयसन्धिकरी ।।

### यात्रायां मानसिकी प्रसन्नता आवश्यकी-

चेतोनिमित्तशकुनैरतिसुप्रशस्तैर्ज्ञात्वा विलग्नबलमुर्व्यधिप: प्रयाति ।
सिद्धिर्भवेदथ पुन: शकुनादितोऽपि चेत्तोविशुद्धिरधिका न च तां विनेयात् ।।

### यात्रायामन्ये केचन विचारा:-

दुग्धं त्याज्यं पूर्वमेव त्रिरात्रं क्षौरं त्याज्यं पञ्चरात्रञ्च पूर्वम् ।
क्षौद्रं तैलं वासरेऽस्मिन् वमिश्च त्याज्यं यत्नाद् भूमिपालेन नूनम् ।।
भुक्त्वा गच्छति यदि चेत्तैलगुडक्षारपक्वमांसानि ।
विनिवर्तते रुग्न: स्त्रीद्विजमवमान्य गच्छतो मरणम् ।।

### वर्षकुण्डल्यां ग्रहदृष्टिविचार:-

| ग्रहा: | सूर्य: | चन्द्र: | कुज: | बुध: | गुरु: | शुक्र: | शनि: |
|---|---|---|---|---|---|---|---|
| प्रत्यक्षमित्र | ५-९ | ५-९ | ५-९ | ५-९ | ५-९ | ५-९ | ५-९ |
| गुप्तमित्र | ३-११ | ३-११ | ३-११ | ३-११ | ३-११ | ३- ११ | ३-११ |
| प्रत्यक्षशत्रु | १-७ | १-७ | १-७ | १-७ | १-७ | १-७ | १-७ |
| गुप्तशत्रु: | ४-१० | ४-१० | ४-१० | ४-१० | ४-१० | ४-१० | ४-१० |

### बाणपञ्चकविचार:-

| बाणा:- | रोग: | अग्नि: | नृप: | चौर: | मृत्यु: |
|---|---|---|---|---|---|
| सूर्यगतांशा: प्रतिराशौ | ८, १७, २६, | २, ११, २०,२९, | ४, १३, २२, | ६, १५, २४ | १, १० १९,२८ |
| कर्मसु वर्ज्या: | व्रतबन्धे | गेहे | नृपसेवायाम् | यात्रायाम् | विवाहे |
| वारे वर्ज्या: | रविवासरे | भौमवासरे | शनिवासरे | भौमवासरे | बुधवासरे |
| काले वर्ज्या: | रात्रौ | सदैव | दिवायाम् | रात्रौ | सन्ध्ययो: |

# ❋ विवाहे मृत्युबाणविचारः ❋

विवाहमुहूर्तस्य निर्धारणे बहुविधविचारा ज्योतिषशास्त्रस्य मर्मज्ञैः कृता विद्यन्ते । यथा मुहूर्त्तनिर्धारणे कर्त्तरी-सग्रहचन्द्राष्टम-लग्न-द्वादशाष्टमग्रह-विषघटी-लता-पात-महापात-खार्जूरोपग्रह-दग्धतिथि-जामित्रैकार्गल-दशयोग-दक्षिणात्यानां बाणदोष-पूर्वोत्तरपश्चिमप्रदेशेषु प्रसिद्धबाणदोषेज्यसितयोर्बृद्धत्वास्तशिशुत्वदोष-सूर्यसङ्क्रमणाख्यदोष-पङ्वन्धकाण-बधिरलग्नदोष-पञ्चशलाका-सप्तशलाकादिचक्रेषु ग्रहवेधनक्षत्रादिवेधप्रभृत्तयो दोषा विचारणीया भवन्ति । तत्राष्टविधेषु ब्रह्मा-दैवार्ष-प्राजापत्यासुर-गान्धर्व-राक्षस-पैशाचेति-विवाहेषु आद्योक्तश्चत्वारो विवाहोक्तेषु मुहूर्त्तेषु कर्त्तव्या इति शास्त्रकाराणामभिमतम् । तद्यथा नारदः- **प्राजापत्यब्राह्मदैवविवाहा ऋषिसंज्ञकाः । उक्तकालेषु कर्त्तव्याश्चत्वारः फलदायकाः।।** एतदतिरिक्तेषु अन्येषु चतुर्षु गान्धर्वासुरपैशाचराक्षसेति विवाहेषु मुहूर्तविचारो न विधेय इति वचनमपि प्राप्यते । तद्यथा - **गान्धर्वासुरपैशाच-राक्षसाख्याश्च सर्वदा ।।** इति।। अत्र पूर्वोक्तेषु ब्रह्म-दैवार्ष-प्रजापत्य-विवाहेषु ब्रह्मविवाहस्यैव समादरः दृश्यते समाजे । अनेन समुत्पन्नाः सन्ततयः उभयत एकविंशतिं पुरुषान् पुनन्ति । अतः विशेषेणास्मिन्नेव विवाहे मुहूर्त्तानां विचारः कर्त्तव्यः। अत्रोक्तेषूपयुक्तदोषेषु विशेषेणद्यत्वे मृत्युबाणदोषः विवाहमूहूर्त्तनिर्द्धारणे विचारर्यन्ते । प्रसङ्गादत्र तदानयनसूत्रमुपस्थाप्यते -

सूर्यगतांशसंख्या ४ ÷ ९ = शेषमानम् । अत्र शेषमानं यदि ५ आयाति तदा तस्मिन् दिने मृत्युबाणो भवति । अस्य मृत्युबाणस्यारम्भः गतांशारम्भात् सूर्यगतांशान्तं यावद् भविष्यति । यथोदाहरणम्- ३/६/२००५ दिनाङ्के शुक्रवासरे मृत्युबाणविचारः- एतस्मिन् दिवसे श्रीजगन्नाथपञ्चाङ्गानुसारेण प्रातः ५/४७ वादने सूर्यस्य राश्यादिमानम्- १/१८/३७/०६ अत्र सूर्यगतांशा १८ ४÷९= शेषमानं ४ आगतम् । अतः सूर्यः यदा १९ अंशे गमिष्यति तस्मात् कालादारभ्य मृत्युबाणारम्भो भविष्यति । १९ अंशान्तं यावद् अस्य कालो भविष्यति । परं **परिहारवचनानुसारेणायं मृत्युबाणः प्रातः-सायं सन्ध्यायान्तथा बुधवासरे एव यदा भवेत्तदा विवाहादिमाङ्गलिकं कार्यं निषिद्धं** भवतीति विशेषः । द्रष्टव्यः मु.चि.श्लो.सं.७४ इत्यलं विस्तरेणेति दिक् ।।

❋❋❋



# 卐 गृहनिर्माणप्रकारः 卐

**स्नानाग्निपाकशयनास्त्रभुजश्च धान्य-**
**भाण्डारदैवतगृहाणि च पूर्वतः स्युः ।**
**तन्मध्यतस्तु मथनाज्यपुरीषविद्या-**
**भ्यासाख्यरोदनरतौषधसर्वधाम ।।**

मुहूर्त्तचिन्तामणेः वास्तुप्रकरणम्- १२/२०-२१

गृहस्थों को जीवन में सुख-शान्ति प्राप्ति हेतु वास्तुशास्त्रोक्त विधि से गृहनिर्माण करना चाहिए । अन्यथा अशुभ-फल की प्राप्ति व विभिन्न कारणों से मानसिक-अशान्ति रहती है । गृह-मण्डप में कौन सा गृह किस दिशा में हो इसके ज्ञानार्थ गृहनिर्माण का स्वरूप चक्र द्वारा नीचे प्रदर्शित किये जाते हैं -

## कूप-बोरिंग अथवा नल की व्यवस्था-

**कूपे वास्तोर्मध्यदेशेऽर्थनाश-**
**स्त्वैशान्यादौ पुष्टिरैश्वर्यवृद्धिः ।**
**सूनोर्नाशः स्त्रीविनाशो मृतिश्च**
**सम्पत्पीडा शत्रुतः स्याच्च सौख्यम् ।।**

अर्थात् कूप व नल इत्यादि मण्डप के मध्य में हों तो अर्थ नाश, ईशानकोण में पुष्टि, पूर्व में ऐश्वर्य-वृद्धि, अग्निकोण में सन्तति-नाश, दक्षिण में स्त्रीविनाश, नैर्ऋत्यकोण में मरण, पश्चिम में हो तो सम्पत्ति की प्राप्ति, वायव्यकोण में हो तो शत्रु से पीडा, उत्तर दिशा में हो तो सौख्य की प्राप्ति होती है । इस प्रकार जल-निर्गम की व्यवस्था भी करनी चाहिए । ❋

## ❁ वास्तुप्रकरणम् ❁

तत्रादौ - वास्तुप्रकरणस्य प्रयोजनम्- गृहस्थस्य क्रिया: सर्वा: न सिध्यन्ति गृहं विना । यतस्तस्माद् गृहारम्भ: प्रवेशसमयौ ब्रुवे ।। अपि च-परगेहे कृता: सर्वा: श्रौतस्मार्तक्रिया: शुभा: । निष्फला: स्युर्यतस्तासां भूमीश:फलमश्नुते ।। वासकर्तुरनुकुलस्थानचयनार्थं सूत्रसंख्या (१) - वासकर्तु: नामराशित: पुरस्य २,५,९,१०,११, संख्यका: राशय: शुभाय भवन्ति । सूत्रसंख्या (२) वासकर्तु: नामवर्गसंख्या द्ध २त्ववासस्थानवर्गसंख्या ष्ठ ८, अत्र प्राप्तं शेषमानं स्थाप्यम् । अनेनैव प्रकारेण वासस्थानवर्गसंख्या द्ध २त्ववासकर्तु: नामवर्गसंख्या ष्ठ ८, अत्रापि प्राप्तं शेषमानं स्थाप्यम् । अनयो: द्वयो: शेषमानयो: योऽधिक: सोऽर्थदो भवति । अर्थात् वासकर्तु: काकिणी ग्रामनामकाकिणीत: अल्पा भवेच्चेत्तदा फलञ्छ्रेयस्करं ज्ञेयम् । उपर्युक्त: विचार: सेवा-व्यवसायादिषु क्षेत्रेषु कर्त्तव्य: । निम्नलिखितं चक्रमिदं गृहनिर्माणार्थं प्रयुज्यते । यतोहि गृहनिर्माणार्थं गृहस्य उपयुक्तदीर्घविस्तारात्मको भूखण्डो श्रेयस्करो भवतीति ।

### –: अत्र दीर्घविस्तारघातरूपपिण्डवशेनायादिबोधकचक्रम् :–

| दीर्घ: | २१ | २५ | २७ | ३१ | ३३ | ३५ | ३५ | ३७ | ३७ | ३९ | ३९ | ४१ | ४१ | ४३ | ४३ | ४५ | ४५ | ४७ | ४७ | ४९ | ४९ | ४९ | ५१ | ५१ | ५१ | ५५ | ५५ | ५५ | ५७ | ५७ | ५९ | ५९ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| विस्तार: | १९ | २१ | २५ | २९ | २७ | २९ | ३३ | ३१ | ३३ | ३३ | ३५ | ३५ | ३९ | ३५ | ४१ | ३७ | ४३ | ४१ | ४५ | ४१ | ४३ | ४५ | ४५ | ४७ | ४९ | ४७ | ४९ | ५३ | ५१ | ५५ | ४९ | ५३ |
| आय: | ७ | ५ | ३ | ३ | ३ | ७ | ३ | ३ | ५ | ७ | ५ | ३ | ७ | १ | ३ | १ | ७ | ७ | ३ | १ | ३ | ५ | ७ | ५ | ३ | १ | ७ | ३ | ३ | ७ | ३ | ७ |
| वार: | ७ | ७ | ६ | ६ | ३ | ७ | ७ | ५ | ६ | ५ | ७ | ७ | ६ | ७ | ५ | ५ | ६ | ४ | २ | ७ | ७ | ७ | ५ | ६ | ७ | ४ | ७ | ६ | ४ | ५ | ७ | ३ |
| अंश: | ९ | ९ | ९ | ३ | ९ | ६ | ९ | ६ | ९ | ९ | ९ | ६ | ९ | ३ | ३ | ९ | ९ | ६ | ९ | ३ | ६ | ९ | ९ | ९ | ९ | ३ | ६ | ३ | ९ | ९ | ३ | ६ |
| द्रव्यं | १२ | १२ | १२ | ४ | १२ | ८ | १२ | ८ | १२ | १२ | १२ | ८ | १२ | ४ | ४ | १२ | १२ | ८ | १२ | ४ | ८ | १२ | १२ | १२ | १२ | ४ | ८ | ४ | १२ | १२ | ४ | ८ |
| ऋणं | ५ | ७ | १ | १ | १ | ५ | १ | १ | ७ | ५ | ७ | १ | ५ | ३ | १ | ३ | ५ | ५ | १ | ३ | १ | ७ | ५ | ७ | १ | ३ | ५ | १ | १ | ५ | १ | ५ |
| ऋक्षं | ६ | १५ | २७ | १० | २७ | २० | ६ | २३ | २१ | ९ | १२ | ५ | २२ | २५ | १० | ९ | ९ | २६ | १८ | ७ | ८ | ९ | २७ | ६ | १२ | २५ | २४ | १३ | ९ | २४ | १६ | १४ |
| तिथि: | १२ | १५ | १५ | ७ | ३ | ५ | १५ | १० | ३ | ६ | १५ | ५ | १२ | १० | ४ | १५ | १५ | ११ | १५ | ७ | ११ | १५ | १५ | ६ | १२ | १० | ५ | १० | ६ | १५ | १३ | ११ |
| योग: | ३ | २१ | २७ | ५ | २७ | १० | ३ | २५ | २४ | १८ | ६ | १६ | २४ | २६ | ५ | १८ | १८ | १३ | ९ | १७ | ४ | १८ | २७ | ३ | ६ | २६ | ७ | २३ | १८ | १२ | ८ | ७ |
| आयु: | ७२ | १२० | १२० | ११२ | ४८ | ८० | १२० | ५६ | ४८ | ९६ | १२० | ८० | ७२ | ४० | ६४ | १२० | १२० | ५६ | १२० | ११२ | ५६ | १२० | १२० | ९६ | ७२ | ४० | ८० | ४० | ९६ | १२० | ८८ | ५६ |

| दीर्घ: | ५९ | ६१ | ६१ | ६१ | ६३ | ६३ | ६३ | ६३ | ६५ | ६५ | ६५ | ६५ | ६७ | ६७ | ६७ | ६९ | ६९ | ७१ | ७१ | ७१ | ७३ | ७३ | ७५ | ७५ | ७५ | ७५ | ७५ | ७५ | ७७ | ७७ | ७७ | ७७ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| विस्तार: | ५१ | ५१ | ५३ | ५५ | ५३ | ५५ | ५७ | ५९ | ५३ | ५७ | ५९ | ६३ | ५५ | ६१ | ६५ | ६१ | ६३ | ५७ | ६५ | ६९ | ६१ | ६३ | ६५ | ६३ | ६५ | ६७ | ६९ | ७३ | ६५ | ७१ | ७५ | ६७ |
| आय: | १ | ७ | १ | ३ | ३ | १ | ७ | ५ | ५ | १ | ३ | ७ | ५ | ७ | ३ | १ | ३ | ७ | ७ | ३ | ५ | ७ | १ | ५ | ३ | १ | ७ | ३ | ५ | ३ | ७ | ७ |
| वार: | ५ | ६ | ५ | ४ | ७ | ७ | ७ | ७ | २ | ४ | ५ | ७ | ६ | ५ | २ | ४ | ७ | २ | ४ | ५ | २ | ७ | ५ | ७ | ६ | ५ | ४ | २ | ७ | ७ | ७ | ७ |
| अंश: | ९ | ९ | ३ | ६ | ९ | ९ | ९ | ९ | ६ | ९ | ६ | ९ | ६ | ६ | ३ | ९ | ९ | ९ | ६ | ९ | ६ | ९ | ३ | ९ | ९ | ९ | ९ | ९ | ६ | ६ | ९ | ३ |
| द्रव्यं | १२ | १२ | ४ | ८ | १२ | १२ | १२ | १२ | ८ | १२ | ८ | १२ | ८ | ८ | ४ | १२ | १२ | १२ | ८ | १२ | ८ | १२ | ४ | १२ | १२ | १२ | १२ | १२ | ८ | ८ | १२ | ४ |
| ऋणं | ३ | ५५ | ३ | १ | १ | ३ | ५ | ७ | ७ | ३ | १ | ५ | ७ | ५ | १ | ३ | १ | ५ | ५ | १ | ७ | ५ | ३ | ७ | १ | ३ | ५ | १ | ७ | १ | ५ | ५ |
| ऋक्षं | २५ | २१ | २५ | २ | ९ | १८ | २७ | ९ | २० | २१ | ८ | ९ | २३ | २६ | १० | ३ | २७ | ३ | ११ | १५ | ११ | १८ | २५ | २७ | १२ | २४ | ९ | ६ | २६ | २१ | ३ | १६ |
| तिथि: | १२ | ३ | ४ | ५ | १२ | १५ | ३ | ६ | ५ | १५ | ५ | १५ | ५ | ११ | १० | १२ | ६ | ६ | ५ | १२ | १४ | १२ | १० | १५ | १५ | १५ | १५ | १५ | ५ | ११ | १५ | ७ |
| योग: | २१ | २४ | २६ | १ | १८ | ९ | २७ | १८ | २० | २४ | ४ | १८ | २५ | १३ | ५ | १५ | २७ | १५ | १९ | २१ | १९ | ९ | २६ | २७ | ६ | १२ | १८ | ३ | १३ | २५ | १५ | ८ |
| आयु: | ७२ | ४९ | ६४ | ८० | ७२ | १२० | ४८ | ९६ | ८० | १२० | ८० | १२० | ८० | ५६ | ४० | ७२ | ९६ | ९६ | ८० | ७२ | १०४ | ७२ | ४० | १२० | १२० | १२० | १२० | १२० | ८० | ५६ | १२० | ११२ |

## 卐 २०७६ विक्रमाब्दस्य वैवाहिकादिविविधमुहूर्ताः 卐

तिथिः दिनं — दिनाङ्कः/मासः — नक्षत्रम्

**चैत्रशुक्लपक्षे-**

१०/११सोमवारः १५अप्रैल१९ मघा

*(मृत्युबाणः दि. १४/०४/२०१९ दिवा ०२/०४ तः दि. १५/०४/२०१९ दिवा ०२/३५ या.)*

१२ मङ्गलवासरः १६,, उ.फा.

१३ बुधवासरः १७,, उ.फा./हस्त

१४ गुरुवासरः १८,, हस्त/चित्रा

१५ शुक्रवासरः १९,, चित्रा/स्वा.

**वैशाखकृष्णपक्षे-**

१ शनिवासरः २०अप्रै. स्वा.(दि.ल.चि.)

०२ रविवासरः २१,, अनु.(व्यतिपातदोषः)

०३ सोमवासरः २२,, अनु.(दि.ल.चि.)

४/५मङ्गलवासरः २३,, मूल

*(मृत्युबाणः दि. २३/०४/२०१९ सायं ०७/०५ तः दि. २४/०४/२०१९ सायं ०७/४३ या.)*

०५ बुधवासरः २४,, मूल(गो.ल.चि.)

०६ गुरुवासरः २५,, उ.षा.

०७ शुक्रवासरः २६,, उ.षा./श्रवण

०८ शनिवासरः २७,, श्रवण/धनि.

९/१०रविवासरः २८,, धनिष्ठा

१२ मङ्गलवासरः ०१मई उ.भा.

१३ गुरुवासरः ०२,, उ.भा./रेव.

**वैशाखशुक्लपक्षे-**

२ सोमवासरः ०६मई रोहिणी

०४ मङ्गलवासरः ०७,, रोहि./मृग.

४/५बुधवासरः ०८,, मृग.(दि.ल.चि)

८ रविवासरः १२,, मघा

*(मृत्युबाणः दि. १२/०५/२०१९ प्रातः ०८/२० तः दि. १३/०५/२०१९ प्रातः ०९/११ या.)*

१० नङ्गलवासरः १४,, उ.फा(भद्रापूर्वं)

११ बुधवासरः १५,, उ.फा/हस्त(संक्रा.दोष)

*(मृत्युबाणः दि. १५/०५/२०१९ दिवा १०/५५ तः दि. १६/०५/२०१९ दिवा ११/४९ या.)*

१२ गुरुवासरः १६,, हस्त/चित्रा

१३ शुक्रवासरः १७,, स्वाती

१५ शनिवासरः १८,, अनुराधा

**ज्येष्ठकृष्णपक्षे-**

१ रविवासरः १९मई अनुराधा

०३ मंगलवासरः २१ मई मूल

०५ गुरुवासरः २३,, उ.षा.

०६ शुक्रवासर २४,, उ.षा/श्रवण

*(मृत्युबाणः दि. २४/०५/२०१९ सायं ०७/०९ तः दि. २५/०५/२०१९ रात्रि ०८/१६ या.)*

६/७शनिवासरः २५,, श्रवण/धनिष्ठा

९/१०मङ्गलवासरः२८,, उ.भा.प.

१० बुधवासरः २९,, उ.भा/रेवती

११ गुरुवासरः ३०,, रेवती

१२ शुक्रवासरः ३१,, अश्विनी

**ज्येष्ठशुक्लपक्षे -**

१/२मङ्गलवासरः ०४जून मृगशिरा

*(मृत्युबाणः दि. ०४/०६/२०१९ प्रातः ०५/२० तः दि. ०५/०६/२०१९ प्रातः ०५/२० या.)*

०६ शनिवासरः ०८,, मघा

०७ रविवासरः ०९,, मघा(दि.ल.चि.)

०८ सोमवासरः १०,, उ.फा.

९/१०मङ्गलवासरः११,, उ.फा/हस्त

१० बुधवासरः १२,, हस्त/चित्रा

*(मृत्युबाणः दि. १२/०६/२०१९ दिवा ०२/०९ तः दि. १३/०६/२०१९ दिवा ०३/१६ या.)*

११ गुरुवासरः १३,, चित्रा/स्वा.

१३ शनिवासरः १ ५ , ,
अनु.(संक्रान्तिदोषः)

*(मृत्युबाणः दि. १५/०६/२०१९ सायं ०५/३१ तः दि. १६/०६/२०१९ सायं ०६/३८ या.)*

१५ सोमवासरः १७,, मूल

**आषाढकृष्णपक्षे-**

२/३बुधवासरः १९जून उ.षा.

३ गुरुवासरः २०,, उ.षा./श्रव.

४/५शुक्रवासरः २१,, श्रव./धनि.

५ शनिवासरः २२,, धनि.(गो.ल.चि.)

८ मङ्गलवासरः २५,, उ.भा.प.

*(मृत्युबाणः दि. २५/०६/२०१९ रात्रि ०३/३९ तः दि. २६/०६/२०१९ रात्रि ०४/५९ या.)*

९ बुधवासरः २६,, रेव.

९/१०गुरुवासरः २७,, रेव./अश्वि.

**आषाढशुक्लपक्षे-**

३ शुक्रवासरः ५जुलाई मघा

*(मृत्युबाणः दि. ०५/०७/२०१९ दिवा ०२/२० तः दि. ०६/०७/२०१९ दिवा ०३/२१ या.)*

४ शनिवासरः ६,, मघा(गो.ल.चि.)

५ रविवासरः ७,, उ.फा.

६ सोमवासरः ८,, उ.फा./हस्त

८ मङ्गलवासरः ९जुला. हस्त/चित्रा

९ बुधवासरः १०,, चित्रा/स्वा.

१० गुरुवासरः ११,, स्वाती (दि.ल.चि.)

अतः परं हरिशयनीदोषत्वात् शुभमुहूर्त्ताऽभावः

**मार्गशीर्षकृष्णपक्षे-**

१ बुधवासरः १३नवम्बर रोहि.

*(मृत्युबाणः दि. १३-१४/११/२०१९ रात्रि ०१/०० तः दि. १४-१५/११/२०१९ रात्रि १२/५१ या.)*

२ गुरुवासरः १४,, रोहि./मृग.

३ शुक्रवासरः १५,, मृग.(भद्रापरम्)

७ मङ्गलवासरः १९,, मघा

८ बुधवासरः २०,, मघा(गो.ल.चि)

९ गुरुवासरः २१,, उ.फा.

१० शुक्रवासरः २२,, उ.फा./हस्तः

११ शनिवासरः २३,, हस्त/चित्रा

१३ रविवासरः २४,, चित्रा/स्वा.(भद्रापूर्वम्)

**मार्गशीर्षशुक्लपक्षे-**

२ गुरुवासरः २८नवम्बर. मूल

४/५ शनिवासरः ३०,, उ.षा.

५ रविवासरः १दिसम्बर उ.षा/श्रव

६ सोमवासरः २,, श्रव./धनि.

*(मृत्युबाणः दि. ०४/१२/२०१९ सायं ०७/४२ तः दि. ०५/१२/२०१९ सायं ०७/२१ या.)*

९ गुरुवासरः ५,, उ.भा.प.

१० शुक्रवासरः ६,, उ.भा.प./रेव

१०/११शनिवासरः७,,रेव/अश्वि(व्यतिपातपरं)

११ रविवासरः ८,, अश्विनी

१४/१५बुधवासरः११,, रोहि.

१५ गुरुवासरः १२,, रोहि./मृग.

**पौषकृष्ण-शुक्लपक्षयोः-**

(गुर्वस्तधन्वर्कदोषत्वाच्छुभमुहूर्ताभावः)

माघकृष्णपक्षे-

*(मृत्युबाण: दि. १५/०१/२०२० रात्रि: ०१/५४*
*त: दि. १६/०१/२०२० रात्रि: ०१/२८ या.)*

५बुधवासर:१५जन.२०उ.फा/हस्त(संक्रा.दोष)

६ गुरुवासर: १६,, हस्त/चित्रा

७ शुक्रवासर: १७,, चित्रा/स्वा.

९ शनिवासर: १८,, स्वाती

१० रविवासर: १९,, अनु.

११ सोमवासर: २०,, अनु.

१२ मङ्गलवासर: २१,, मूल

१३ बुधवासर: २२,, मूल

माघशुक्लपक्षे:-

१ शनिवासर: २५जन. श्रव./धनि.

२ रविवासर: २६,, धनि.(व्यतिपातपरम्)

४ बुधवासर: २९,, उ.भा.प.

५ गुरुवासर: ३०,, उ.भा./रेव.

६ शुक्रवासर: ३१,, रेव./अश्वि.

७ शनिवासर: १फर. अश्वि.(गो.ल.चि.)

*(मृत्युबाण: दि. ०१/०२/२०२० सायं ०६/३८*
*त: दि. ०२/०२/२०२० सायं ०७/१७ या.)*

९/१०सोमवासर: ३,, रोहि.

१० मङ्गलवासर: ४,, रोहि./मृग

११ बुधवासर: ५,, मृग.

१५ शनिवासर: ९,, मघा

फाल्गुनकृष्णपक्षे -

१ सोमवासर: १०फर मघा(दि.ल.चि.)

*(मृत्युबाण: दि. १०/०२/२०२० दिवा ०३/४३*
*त: दि. ११/०२/२०२० दिवा ०३/२६ या.)*

२ मङ्गलवासर ११,, उ.फा.

४ बुधवासर: १२,, उ.फा/हस्त

५ गुरुवासर: १३,, हस्त/चित्रा

*(मृत्युबाण: दि. १३/०२/२०२० दिवा ०२/५३*
*त: दि. १४/०२/२०२० दिवा ०२/३७ या.)*

६ शुक्रवासर: १४,,
स्वा(संक्रान्तिदोष:)

८ रविवासर: १६,, अनु.

१० मङ्गलवासर: १८,, मूल

१२ गुरुवासर: २०,,
उ.षा(व्यतिपातदोष:)

१३ शुक्रवासर: २१,, उ.षा./श्रव.

फाल्गुनशुक्लपक्षे -

२ मङ्गलवासर: २५फर. उ.भा.प.

३ बुधवासर: २६,, उ.भा./रेव.

४ गुरुवासर: २७,, रेव./अश्वि.

५ शुक्रवासर: २८,, अश्वि.

७ सोमवासर: ०२मार्च रोहि(भद्रापरम्)

अत: परं होलाष्टकदोष:

चैत्रकृष्णपक्ष:-

१ मङ्गलवासर: १०मार्च उ.फा/हस्त

२ बुधवासर: ११,, हस्त/चित्रा

*(मृत्युबाण: दि. ११/०३/२०२० दिवा ११/३४*
*त: दि. १२/०३/२०२० दिवा ११/३७ या.)*

३ गुरुवासर: १२,, चित्रा/स्वा.

४ शुक्रवासर: १३,, स्वा.(दि.ल.चि.)

अत: परं मीनार्कदोष:

**विशेष:-''त्रिषु-त्रिषु उत्तरादिषु स्वातौ मृगशिरसि रोहिण्याम्,, पारस्करगृह्यसूत्रानुसारं उ.फा., हस्त, चित्रा, उ.षा., श्रवणा, धनिष्ठा, उ.भा., रेवती, अश्विनी, रोहिणी, मृगशिरा, स्वाती नक्षत्रेषु पाणिग्रहणं शुभाय भवति।**

### 卐 उपनयनमुहूर्ता: 卐

चैत्रशुक्लपक्षे- (ब्राह्मणवटूनां केवलम्)

२ रविवासर: ७अप्रै.१९ अश्वि.

५ बुधवासर: १०,, रोहि./मृग.

९/१०रविवासर: १४,, पुष्य/श्लेषा(स्वयंसिद्ध)

वैशाखकृष्णपक्षे -

३ सोमवासर: २२ अप्रैल अनु.(भद्रापरं)

वैशाखशुक्लपक्षे -

५ गुरुवासर: ९ मई आर्द्रा

११ बुधवासर: १५,, हस्त(संक्रान्तिदोष:)

१२ गुरुवासर: १६,, हस्त/चित्रा

ज्येष्ठकृष्णपक्षे -

*(रोगबाण: दि. २२/०५/२०१९ सायं ०५/२१*
*त: दि. २३/०५/२०१९ सायं ०६/१९ या.)*

५ गुरुवासर: २३ मई उ.षा.

ज्येष्ठशुक्लपक्षे -

३ गुरुवासर: ६ जून पुनर्वसु

४/५शुक्रवासर: ७,, पुष्य(रिक्तापरम्)

१० बुधवासर: १२,, हस्त/चित्रा

११ गुरुवासर: १३,, चित्रा/स्वा.

*(रोगबाण: दि. १३/०६/२०१९ दिवा ०३/१६*
*त: दि. १४/०६/२०१९ दिवा ०४/२३ या.)*

१२ शुक्रवासर: १४,, स्वा.(संक्रान्तिदोष:)

आषाढकृष्णपक्षे-

२ बुधवासर: १९जून पू.षा/उ.षा

आषाढशुक्लपक्षे-

२ गुरुवासर: ४ जुलाई पुष्य:

३ शुक्रवासर: ५,, आश्लेषा

१० गुरुवासर: ११,, स्वा.

अत: परं हरिशयनदोष:।

माघशुक्लपक्षे-

२ रविवासर: २६जन.२० धनि.

३ सोमवासर: २७,, शतभिषा

४/५बुधवासर: २९,,पू.भा/उ.भा(रिक्तापरं)

५ गुरुवासर: ३० उं.भा.(स्वयंसिद्ध:)

फाल्गुनकृष्णपक्षे-

५ गुरुवासर: १३ फर. हस्त/चित्रा

फाल्गुनशुक्लपक्षे-

३ बुधवासर: २६फर. उ.भा.प.

४/५शुक्रवासर: २८,, अश्वि.

१० गुरुवासर: ०५ मार्च आर्द्रा/पुन.

११ शुक्रवासर: ०६,, पुन./पुष्य(भद्रापरं)

चैत्रकृष्णपक्षे-

२ बुधवासर: ११ मार्च हस्त:

### 卐 अक्षर/विद्यारम्भमुहूर्ता: 卐

विद्यारम्भे- र.बु.गु.शु.दिवसा: एव ग्राह्या: एवञ्च सप्तविंशति नक्षत्रेषु पञ्च नक्षत्राणि भ.कृ.म.विशा. ज्ये.अग्राह्यानि सन्ति ।

चैत्रशुक्लपक्षे-

१३ बुधवासर: १७अप्रै.१९ उ.फा.

१५ शुक्रवासर: १९अप्रै. चित्रा

वैशाखकृष्णपक्षे-
५ बुधवासरः २४ अप्रै. मूल
७ शुक्रवासरः २६ ,, उ.षा.
१० सोमवासरः २९ ,, शतभिषा
१२ बुधवासरः ०१ मई उ.भा.प.
वैशाखशुक्लपक्षे-
०५ गुरुवासरः ०९ मई आर्द्रा
०६ शुक्रवासरः १० ,, पुन./पुष्य
१० बुधवासरः १५ ,, उ.फा./हस्त
ज्येष्ठकृष्णपक्षे -
५ गुरुवासरः २३ मई उ.षा.
६ शुक्रवासरः २४ ,, उ.षा./श्रव.
११ गुरुवासरः ३० ,, रेवती
१२ शुक्रवासरः ३१,, अश्वि.
ज्येष्ठशुक्लपक्षे-
२ बुधवासरः ५ जून आर्द्रा
३ गुरुवासरः ६ ,, पुनर्वसु
४/५ शुक्रवासरः ७,, पुष्य
१० बुधवासरः १२ ,, हस्त (व्यतिपातपरं)
११ गुरुवासरः १३,, चित्रा/स्वा.
१२ शुक्रवासरः १४,, स्वा.
आषाढकृष्णपक्षे-
२ बुधवासरः १९ जून पू.षा/उ.षा.
६ रविवासरः २३ ,, शत.
९/१० गुरुवासरः २७,, रेव./अश्वि.
आषाढशुक्लपक्षे-
२ गुरुवासरः ४ जुला. पुष्य
३ शुक्रवासरः ५ ,, श्लेषा
५ रविवासरः ७,, पू.फा.
१० गुरुवासरः ११,, स्वा.
माघकृष्णपक्षे -
११ सोमवासरः २० जन. २० अनुराधा
माघशुक्लपक्षे-
२ रविवासरः २६ जन. धनि.
३ सोमवासरः २७ ,, शत.
४/५ बुधवासरः २९ ,, पू.भा/उ.भा.
६ शुक्रवासरः ३१ ,, रेवती
१२ गुरुवासरः ०६ फर. आर्द्रा
फाल्गुनकृष्णपक्षे-
५ गुरुवासरः १३ फर. हस्त
११ बुधवासरः १९,, पू.षा.
१२ गुरुवासरः २० ,, उ.षा.
फाल्गुनशुक्लपक्षे -
३ बुधवासरः २६ फर. उ.भा.
४/५ शुक्रवासरः २८ ,, अश्वि.
११ शुक्रवासरः ०७ मार्च पुष्य

## 卐 द्विरागमनम् 卐

चैत्रशुक्लपक्षे-
१०/११ सोमवासरः १५ अप्रै. १९ मघा
१३ बुधवासरः १७ ,, उ.फा.
१५ शुक्रवार: १९ ,, चित्रा
वैशाखकृष्णपक्षे-
५ बुधवासरः २४ अप्रै. मूल
६ गुरुवासरः २५ ,, उ.षा.
७ शुक्रवार: २६ ,, उ.षा.
८ शनिवासरः २७ ,, श्रव.
१० सोमवासरः २९ ,, शत.
१३ गुरुवासरः २ मई उ.भा.
वैशाखशुक्लपक्षे -
२ सोमवासरः ६ मई रोहि.
५ गुरुवासरः ९ ,, पुनर्वसु
६ शुक्रवार: १० ,, पुन./पुष्य
७ शनिवासरः ११ ,, पुष्य
११ बुधवासरः १५ ,, उ.फा/हस्त
मार्गशीर्षकृष्णपक्षे-
६ सोमवासरः १८ नव. पुष्य
९/१० गुरुवासरः २१ ,, उ.फा.
१० शुक्रवासरः २२ ,, उ.फा.
११/१२ शनिवासरः २३,, हस्त
मार्गशीर्षशुक्लपक्षे-
१ बुधवासरः २७ नव. अनु.
२ गुरुवासरः २८ ,, मूल
३ शुक्रवासरः २९ ,, मूल
६ सोमवासरः २ दिस. श्रव.
८ बुधवासरः ४ ,, शत.
९ गुरुवासरः ५ ,, उ.भा.प.
१० शुक्रवासरः ६ ,, उ.भा.प.
१४/१५ बुधवासरः ११ ,, रोहि.
१५ गुरुवासरः १२ ,, रोहि./मृग.
फाल्गुनकृष्णपक्षे-
५ गुरुवासरः १३ फर. २० हस्त/चित्रा
६ शुक्रवासरः १४ ,, चित्रा
७ शनिवासरः १५ ,, स्वा.
१२ गुरुवासरः २० ,, उ.षा.
फाल्गुनशुक्लपक्षे-
१ सोमवासरः २४ फर. शत.
३ बुधवासरः २६ ,, उ.भा.प.
४/५ शुक्रवासरः २८ ,, अश्वि.
७ सोमवासरः २ मार्च रोहि.
११ शुक्रवासरः ६ ,, पुन./पुष्य
चैत्रकृष्णपक्षे-
४/५ शुक्रवासरः १३ मार्च स्वाती

## 卐 गृहारम्भ-मुहूर्ताः 卐



चैत्रशुक्लपक्षे-
१३ बुधवासरः १७ अप्रै. १९ उ.फा. (भूमिशयनदोषः)
१५ शुक्रवासरः १९ ,, चित्रा
वैशाखकृष्णपक्षे-
१ शनिवासरः २० अप्रै. स्वा.
वैशाखशुक्लपक्षे -
३ मङ्गलवासरः ७ मई रोहि. (स्वयं सिद्धः)
५ गुरुवासरः ९ ,, पुन.
७ शनिवासरः ११ ,, पुष्य (भूमिशयनदोषः)
११ बुधवासरः १५ ,, उ.फा/हस्त
१२ गुरुवासरः १६,, हस्त/चित्रायां (भूमिशयनदोषः)
ज्येष्ठशुक्लपक्षे-
१० बुधवासरः १२ जून हस्त/चित्रा (हस्ते भूमिशयनदोषः)
११ गुरुवासरः १३,, चित्रा/स्वा.
१२ शुक्रवासरः १४,, स्वा.
श्रावणकृष्णपक्षे
२ गुरुवासरः १८ जुलाई श्रवण
२/३ शुक्रवासरः १९ ,, धनि.
श्रावणशुक्लपक्षे
९/१० शुक्रवासरः ९ अग. अनुराधा (भूमिशयनदोषः)
१५ गुरुवासरः १५ ,, श्रवण
भाद्रपदशुक्लपक्षे-
११ सोमवासरः ९ सित. उ.षा.
१३ बुधवासरः ११,, श्रवण (भूमिशयनदोषः)
आश्विनशुक्लपक्षे-
१० मङ्गलवासरः ८ अक्तु. श्रवण

कार्तिकशुक्लपक्षे-

११ शुक्रवासरः ८ नव.उ.भा.(स्वयं सिद्धमुहूर्तः)
१२ शनिवासरः ९,, उ.भा.

मार्गशीर्षकृष्णपक्षे-

३ शुक्रवासरः १५ नव. मृग.
९/१०गुरुवासरः २१,, उ.फा.
१० शुक्रवासरः २२,, उ.फा/हस्त

मार्गशीर्षशुक्लपक्षे-

६ सोमवासरः २ दिस. श्रवण
१० MngVeg: 6 ,, G.Ve(भूमिशयनदोषः)
१०/११शनिवासरः७ ,, रेवती/अश्वि.
१४/१५बुधवासरः११ ,, रोहिणी
१५ गुरुवासरः १२,, मृग.

माघशुक्लपक्षे-

९/१०सोमवासरः३ फर.२० रोहि.
१३ शुक्रवासरः ७,, पुन.(भूमिशयनदोषः)

फाल्गुनकृष्णपक्षे-

४/५बुधवासरः १२ फर. उ.फा/हस्त
५ गुरुवासरः १३, हस्त/चित्रायां(भूमिशयनदोषः)

फाल्गुनशुक्लपक्षे-

११ शुक्रवासरः ६ मार्च पुन/पुष्य

卐 गृहप्रवेश-मुहूर्ताः 卐

वैशाखकृष्णपक्षे-

१० सोमवासरः २९ अप्रै.१९ शत.
१२ गुरुवासरः २ मई उ.भा.प

वैशाखशुक्लपक्षे -

३ मङ्गलवासरः ७ मई रोहि. (स्वयं सिद्धः)
५ गुरुवासरः ९,, पुन.
७ शनिवारः ११,, पुष्य
११ बुधवासरः १५,, उ.फा./हस्त
१२ गुरुवासरः १६,, हस्त/चित्रा

ज्येष्ठकृष्णपक्षे-

१० बुधवासरः २९मई उ.भा.प.
११ गुरुवासरः ३०,, रेवती
१२ शुक्रवासरः ३१,, अश्वि.

ज्येष्ठशुक्लपक्षे-

८ सोमवासरः १० जून उ.फा.
१० बुधवासरः १२,, हस्त(स्वयं सिद्धः)
११ गुरुवासरः १३,, चित्रा/स्वा.
१३ शनिवासरः १५,, अनुराधा

श्रावणकृष्णपक्षे- जीर्णगृहप्रवेशः-

१० शनिवासरः २७ जुलाई रोहिणी
*(अनलबाणः दि. २७/०७/२०१९ सायं ०७/४७ तः दि. २८/०७/२०१९ दिवा ०४/५४ या.)*
१२ सोमवासरः २९,, मृगशिरा

श्रावणशुक्लपक्षे- जीर्णगृहप्रवेशः-

७ बुधवासरः ७ अगस्त स्वाती
९/१०शुक्रवासरः९,, अनुराधा

कार्तिकशुक्लपक्षे- जीर्णगृहप्रवेशः-

१२ शनिवासरः ९ नव. उ.भा.प.

मार्गशीर्षकृष्णपक्षे- जीर्णगृहप्रवेशः-

९/१०गुरुवासरः २१ नव. उ.फा(स्वयं सिद्धः)
१० शुक्रवासरः २२ ,, उ.फा.
११/१२शनिवासरः२३ ,, हस्त

मार्गशीर्षशुक्लपक्षे-

६ सोमवासरः २ दिस. श्रवण
१० शुक्रवासरः ६ दिस. उ.फा.
*(अनलबाणः दि. ०५/१२/२०१९ सायं ०७/२१ तः दि. ०६/१२/२०१९ सायं ०७/०० या.)*
१०/११शनिवासरः७दिस. रेव.

माघकृष्णपक्षे-

१३ बुधवासरः २२ जन.२० मूल

माघशुक्लपक्षे-

५ गुरुवासरः ३०जन. उ.भा/रेव.
६ शुक्रवासरः ३१,, रेव/अश्वि.
७ शनिवासरः १फर. अश्वि.
१३ शुक्रवासरः ७,,. पुन.

फाल्गुनशुक्लपक्षे-

७ सोमवासरः २मार्च रोहि.
११ शुक्रवासरः ६,, पुन./पुष्य

**अत्र कश्चिद् विशेषः-**

गृहप्रवेशप्रकरणे अग्निबाणविचारः मुख्यतमः। परमयन्तु भौमवासरे एव विचारणीयो भवति। उपनयने रोगबाणः। अयं रविवासरे विशेषेण त्याज्यो भवतीति मुहूर्तचिन्तामणिकारस्य अभिमतम्। तद्यथा -

रात्रौ चौररुजो दिवा नरपतिर्वह्निः सदा सन्ध्ययोः
मृत्युश्चाथ शनौ नृपो दिवि मृतिर्भौमेग्निचौरौ रवौ।
रोगोऽथ व्रतगेहगोपनृपसेवायानपाणिग्रहे
वर्ज्याश्च क्रमतो बुधैरुगनलक्ष्मापालचौरा मृतिः॥

मुहूर्तचिन्तामणिःविवाहप्रकरणम् ६/७४

**नवग्रहाणां समिधाः-**

अर्कः पलाशः खदिरो ह्यपामार्गश्च पीपलः।
उदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात्॥

याज्ञवल्क्यसंहिता-१/३०२

शुक्लपक्षीयकरणबोधकचक्रम्-

| पूर्वार्द्ध | किं | वाल | तै. | वणि | बव | कौ. | ग. | वि. | वाल | तै. | वणि | बव | कौ | ग. | वि. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथयः | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | १५ |
| उत्तरा. | बव | कौ. | ग. | वि. | बाल | तै. | वणि | बव | कौ | ग. | वि. | वाल | तै. | वणि | बव |

कृष्णपक्षीयकरणबोधकचक्रम्-

| पूर्वा | वाल | तै. | वणि | ब. | कौ. | ग. | वि. | वा. | तै. | वणि | बव | कौ. | ग. | वि. | चतु. |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| तिथय | १ | २ | ३ | ४ | ५ | ६ | ७ | ८ | ९ | १० | ११ | १२ | १३ | १४ | ३० |
| उत्तरा. | कौ. | ग. | वि. | वाल | तै. | वणि | बव. | कौल | गर. | वि. | वाल | तै. | वणि | श | नाग. |

## २०७६ विक्रमाब्दस्य रवियोगाः

| नक्षत्रम् | दिनाङ्कः | समयः |
|---|---|---|
| कृत्तिका | ०८अप्रैल १९ | ९/४१त: |
| ,, | ०९,, | १०/१६या. |
| मृगशिरा | १० | १०/२८त: |
| ,, | ११ | १०/१४या. |
| पुष्य | १३ | ०८/४४त: |
| ,, | १४ | ०७/२४या. |
| आश्लेषा | १४/१५ | ४/४९या. |
| मघा | १५/१६ | ३/४८या. |
| हस्त | १७ | २३/१३त: |
| ,, | १८ | २१/०३या. |
| पू.षा. | २४ | १८/३१त: |
| ,, | २५ | २०/३३या. |
| मृगशिरा | ०७मई | १६/२५त: |
| ,, | ०८,, | १५/५२या. |
| पुनर्वसु | ०९,, | १५/०६त: |
| ,, | १०,, | १३/४४या. |
| मघा | १२,, | ११/४४त: |
| ,, | १२/१३ | ००/०३या. |
| पू.फा. | १३,, | १०/१८त: |
| उ.फा. | १५,, | ०७/१या. |
| स्वाती | १६/१७ | ०४/१४त: |
| ,, | १७/१८ | ०३/०१या. |
| श्रवण | २४ | ०७/२४त: |
| ,, | २५ | १०/०५या. |
| धनिष्ठा | २५ | २०/१६त: |
| ,, | २६ | १३/०७या. |
| पुनर्वसु | ०५जून | २१/४८त: |
| ,, | ०६जून | २०/०५या. |
| आश्लेषा | ०७,, | १८/२१त: |

| नक्षत्रम् | दिनाङ्कः | समयः |
|---|---|---|
| ,, | ०८,, | १६/५८या. |
| मघा | ०८,, | १८/२०त: |
| ,, | ०९,, | १५/२९या. |
| हस्त | ११,, | १२/४७त: |
| चित्रा | १३,, | ११/००या. |
| अनुराधा | १५,, | १०/०३त: |
| ,, | १६,, | १०/११या. |
| पू.भा. | २३,, | २३/५६त: |
| ,, | २४/२५ | ०२/५५या. |
| आश्लेषा | ४/५जुला | ०२/०५त: |
| ,, | ०५,, | २३/४९या. |
| मघा | ०६,, | १६/४२त: |
| ,, | ०६,, | २१/३३या. |
| उ.फा. | ०७,, | १९/५३त: |
| ,, | ०८,, | १८/१८या. |
| स्वाती | १०,, | १६/२४त: |
| विशाखा | १२,, | १६/०७या. |
| मूल | १४,, | १७/२५त: |
| ,, | १५,, | १८/५०या. |
| रेवती | २३,, | १३/०७त: |
| ,, | २४,, | १५/४०या. |
| पू.फा. | ०३अगस्त | ०६/२२त: |
| उ.फा. | ०४/०५ | ०१/१८या. |
| चित्रा | ०५,, | २३/२६त: |
| ,, | ०६,, | २२/१३या. |
| अनुराधा | ०८,, | २१/३४त: |
| ज्येष्ठा | १०,, | २३/०९या. |
| उ.षा. | १२/१३ | ०२/३९त: |
| ,, | १३/१४ | ०५/००या. |

| नक्षत्रम् | दिनाङ्कः | समयः |
|---|---|---|
| भरणी | २१/२२ | १२/३४त: |
| ,, | २२/२३ | ०२/२८या. |
| चित्रा | ०२ सित. | ८/१५त: |
| ,, | ०३,, | ०६/०८या. |
| विशाखा | ०३/०४ | ०४/४१त: |
| ,, | ०४/०५ | ०४/०१या. |
| मूल | ०६/०७ | ०४/५२त: |
| पू.षा. | ०९,, | ०८/२४या. |
| धनिष्ठा | ११,, | १३/४३त: |
| ,, | १२,, | १५/२०या. |
| रोहिणी | २०,, | ०९/५७त: |
| ,, | २१,, | १०/३७या. |
| ज्येष्ठा | ०३अक्तु. | १९/५९त: |
| ,, | ०४,, | १२/०९या. |
| उ.षा. | ०६,, | १४/५०त: |
| श्रवण | ०८,, | १९/५४या. |
| पू.भा. | १०/११ | ०१/५६त: |
| उ.भा. | १३,, | ०७/४२या. |
| आर्द्रा | १९,, | १७/१०त: |
| ,, | २०,, | १७/१७या. |
| ज्येष्ठा | ३०,, | २१/४७त: |
| ,, | ३१,, | २२/१७या. |
| पू.षा. | ०१नव. | २१/३८त: |
| ,, | ०२,, | २२/४७या. |
| धनिष्ठा | ०४/०५ | ०३/०५त: |
| शत/पू.भा. | ०८,, | ११/५९या. |
| अश्विनी | १०,, | १७/२२त: |
| ,, | ११,, | १९/२२या. |

| नक्षत्रम् | दिनाङ्कः | समयः |
|---|---|---|
| पुष्य | १७,, | २२/२५त: |
| ,, | १८,, | २१/४५या. |
| पू.षा. | २९,, | ०७/१७त: |
| ,, | ३०,, | ०८/००या. |
| श्रवण | ०१दिस. | ०९/२०त: |
| ,, | ०२,, | ११/४४या. |
| धनिष्ठा | ०३,, | १२/०८त: |
| ,, | ०३,, | १४/०१या. |
| उ.भा. | ०५,, | १९/५६त: |
| रेवती | ०७/०८ | ०१/३४या. |
| कृत्तिका | ०९/१० | ०५/१६त: |
| ,, | १०/११ | ०६/११या. |
| पू.फा. | १७/१८ | ०१/०७त: |
| ,, | १८,, | ११/४६या. |
| श्रवण | २८,, | १८/१९त: |
| धनिष्ठा | ३०,, | २२/३१या. |
| पू.भा. | ३१/१जन २० | १२/५७त: |
| ,, | १/२जन | ०४/१३या. |
| अश्विनी | ०४ | १०/२५त: |
| भरणी | ०६,, | १४/२५या. |
| मृगशिरा | ०८,, | १६/००त: |
| ,, | ०९,, | १५/४५या. |
| हस्त | १५/१६ | ०४/१०त: |
| ,, | १६/१७ | ०२/४४या. |
| पू.भा. | २८,, | ०९/०७त: |
| ,, | २९,, | १२/०४या. |
| रेवती | ३०,, | १५/०७त: |
| ,, | ३१,, | १८/३६या. |
| कृत्तिका | ०२फरवरी | २३/११त: |

| नक्षत्रम् | दिनाङ्कः | समयः |
|---|---|---|
| रोहिणी | ०४/०५ | ०१/४९या. |
| पुष्य | ०७,, | २३/५०त: |
| ,, | ०८,, | २१/४९या. |
| स्वाती | १४,, | ०४/४२त: |
| ,, | १५,, | ०६/१९या. |
| रेवती | २६,, | २२/०२त: |
| ,, | २७/२८ | ०१/१३या. |
| भरणी | २८/२९ | ०४/०९त: |
| ,, | ०१ मार्च | ०६/४२या. |
| मृगशिरा | ०३,, | १०/२६त: |
| आर्द्रा/पुन | ०६,, | १०/२८या. |
| मघा | ०८,, | ०६/३२त: |
| ,, | ०८/०९ | ०३/२९या. |
| अनुराधा | १४,, | १२/२६त: |
| ,, | १५,, | ११/३४या. |

### कलिमाहात्म्यम्

सन्तः क्वापि न सन्ति सन्ति यदि वा दुःखेन जीवन्ति ते
विद्वांसोऽपि न सन्ति सन्ति यदि वा मात्सर्ययुक्ताश्च ते ।
राजानोऽपि न सन्ति सन्ति यदि वा लोभाद्धनग्राहिणो
दातारोऽपि न सन्ति सन्ति यदि वा सेवानुकूलाः कलौ ।।
धर्मः प्रव्रजितस्तपः प्रचलितं सत्यञ्च दूरे गतं
पृथ्वीमन्दफला नराः कपटिनः चित्तञ्च शाठ्योर्जितम्।।
राजानोऽर्थपराः न रक्षणपराः पुत्राः पितुर्द्वेषिणः
साधुः सीदति दुर्जनः प्रभवति प्राप्ते कलौ दुर्युगे ।।

